# सुशीला

## (प्रेक्षणकम्)



प्रणेता

राधावल्लभः

# सुशीला

(प्रेक्षणकम्)

प्रणेता

राधावल्लभः

प्रकाशिका

संस्कृतपरिषद्, संस्कृत विभागः.

डॉ० हरीसिंह गौर विश्वविद्यालयः , सागरम्

२००२

# भूमिका

*हत्वानृप पतिमवेक्ष्य भुजङ्गदष्ट*
*देशान्तरे स्वयमह गणिकाऽस्मि जाता।*
*पुत्र पति समधिगम्य च वृक्षदग्ध*
*शोचामि गोपगृहिणी कथमल्पतक्रम्।।*

बहो कालात् प्राक् श्लोकोऽय आचार्यप्रवरैर्बच्चुलालावस्थिभिरेकदा सानुग्रह श्रावित, एतत्सम्बद्धा परम्पराधिगता कथा ऽपि च तै साङ्केतिता। कथामिमाश्रित्य रूपक मया निर्मेयमित्यपि तेषामासीन्निदेश। ततो व्यतीयाय प्रायशो ऽब्दाना दशकम्। यथा कथञ्चिद् रूपकमिद निरमायि मया। अथास्य हिन्दीभाषान्तर प्रथम प्रकाश्यता गत भोपालात् उन्मीलन्त्या रङ्गसवाद इति त्रैमासिकपत्रिकाया १९९९-ख्रिस्ताब्दस्य अक्टोबर-दिसम्बरमासाङ्के। तदिद सुशीलेति नवीन मम प्रेक्षणक पुस्तकाकारमिदानी प्रकाश्यते।

अत्र सन्ति पात्राणि सुशीला, तस्या पतिर्देव शर्मा, पञ्च स्त्रिय, राजा मणिभद्रसिह, राजा सबलसिह राजा कृष्णप्रतापसिहश्च। समेषा पुरुषपात्राणा भूमिका एकेनैव पात्रेण निर्वोढु शक्यते युज्यते च तथा। अभिनयसौकर्याय पञ्च सख्यो यथाप्रसङ्ग गोपस्त्रियो भवन्ति, वने वृक्षततिमभिनयन्ति प्रतीहार्यो भवन्ति गणिकाश्चैव।

प्रेक्षणकेऽस्मिन् विचित्रता अपूर्वता च लक्ष्यीकरिष्यते सहृदयपाठकै र्भावकैश्च प्रेक्षकैरिति मन्ये। आशासे सुरभारतीसदने समर्पित सपर्यासुममिद स्वीकरिष्यते सरस्वत्येति।

**राधावल्लभ**

**||नान्दी||**

दु ख येन सुखेन सारसहज सम्मिश्र्य सङ्गुम्फित
आकाश पवनस्तथा च धरणी सम्मेलिता अश्रुभि ।
क्रोधाग्नौ च सुपाच्य तद्धि सकल यो लीलया निर्ममे
नारी कामपि तामपूर्वरचना तस्मै नमो वेधसे।।

***(तत प्रविशन्ति तक्रविक्रेत्र्यः पञ्च स्त्रियः सुशीलया सह)***

**स्त्रिय**- ***(गायन्ति)***

सन्ध्याकाले दुग्धा गाव
दुग्ध प्राप्त दोह दोहम्,
ज्वलिता चुल्ली दुग्ध क्वथित
सर्वं दुग्ध दधि सञ्जातम्,
सञ्जात दधि, दधि मथित
तक्रमिद तक्रमिद निर्मितम्।

**स्त्री-१**- तक्रम्, तक्रम्, आयान्तु गृह्णन्तु तक्रम्।

**स्त्री २**- अम्ल मधुर तक्रम्।

**स्त्री ३**- अयि सुशीले त्वरस्व, त्वरस्व'

**स्त्री-४**- सा सर्वदा चिरायते। अद्य तु विलम्बो जात ।

**स्त्री ५**- सा परिश्रान्तेति मन्ये।

**सुशीला**- ***(आत्मगतम्)*** सत्यमस्मि दृढ परिश्रान्ताऽहम्। पराजिताऽहम्। कदा समाप्ति यास्यति अय प्रपञ्च—

**स्त्री ३**- अयि त्वरस्व त्वरस्व।

**स्त्री ४**- तक्र विक्रेतुमागताऽसि अथवा स्वैरविहार कर्तुम्।

**सुशीला**- ***(प्रेक्षकान् प्रति)*** भवन्तो जानीयुर्यदह कापि तक्रविक्रेत्री आभीरबालाऽस्मि। परन्तु नाह तथा, यथा भवन्तो जानन्ति। काऽह ननु— अहम् एतद्विस्मृतवती। काऽहमासम्। मया नैकानि रूपाणि विधृतानि। अह जननी जाता। अह पत्नी जाता। अह राज्ञी जाता। अह सेविका जाता।

**स्त्री-१-** पश्यत, सा तत्र स्थिता किमपि जल्पति।

**स्त्री-२-** नैना सह आनेष्याम श्व प्रभृति।

**स्त्री ५-** मा कुप्यत। कोपेन किम्? सा नवा नवा वर्तते।

**स्त्री २-** नवेति ता वदसि? सा कृतक्रीडा।

**स्त्री ४-** कथ सर्वदा जोष तिष्ठति। न तस्या किमपि ज्ञायते।

**स्त्री ५-** सर्व स्वा स्वा प्रकृति प्रतिपद्यते।

**स्त्री ३-** एतादृशी प्रकृति न अस्मभ्य रोचते।

**स्त्री ५-** ननु एषापि अस्मासु सम्मिश्रिता स्यात्। (प्रथमा निर्दिश्य) यदा इयमागता तदा इयमपि कथ अन्यादृशी आसीत्।

**स्त्री १-** परमेतत् सत्यम्। अस्या कारणात् भोलुकस्य गृह गृह जातम्। तस्या प्रथमा स्त्री यदा ममार, तत प्रभृत्यसौ अतथाविध आसीत्।

**स्त्री ५-** स तु प्राणान् पणीकृत्य स्निह्यत्यस्याम्। परन्तु अनयापि एतदवगन्तव्यम्। यदि न तेनैषा पृष्टा - का त्वम्, कुत आयाता, कस्यासि इति। गृहे स्थापिता तेन इयम्। तर्हि अनयाऽपि शोभन वर्तितव्यम्।

**स्त्री ३-** यदि कदाचित् दुग्ध वा दधि वा निपातयतीयम्, तर्हि स पशुमार ताडयिष्यति, चोटयिष्यति, छोटयिष्यति, पोटयिष्यति, कुट्टयिष्यति—। तदा स्मरिष्यति इयम्।

**स्त्री १-** अयमेव महान् दोष भोलुकस्य। दुग्धस्य दधिनो वा हानिमसौ न सहते।

**स्त्री २-** तदेव जात पुरा। प्रथमाया पत्न्या हस्तेन दुग्धसम्भृता स्थाली निपतिता। दुग्ध विसष्ठुलम्। तेन सा तथा लत्तिकाभि प्रहृता यत् न चिर शय्याया उत्थातु समर्थाऽभूत्, अन्ततश्च स्वर्ग गता।

**स्त्री ५-** अयि सुशीले! तत्र स्थिता कि त्व भोलुकस्य स्मरसि? शीघ्रमायाहि शीघ्रम्।

**सुशीला-** (तथैव प्रेक्षकान् प्रति) भोलुकोऽस्ति मे पति। ननु पतिरेवैष। अथवा कीदृश पति? कमह स्व पतिमिति कथयामि? विवाहिताऽहम्। पर न कस्यापि सञ्जाता। न स्वैर रुदितम्, न स्वैर शयितम्।

*।। समूह-गीतम्।।*

*वयो व्यतीतम्, अङ्ग गलितम्*
*शय्याया आस्तरणे,*
*नाह शयिता, नाह मुदिता*
*मृदिता ससरणे।*

*आश्वासो न क्षणमपि लब्ध—*

*मया जीवने न वा मरणे।*

**स्त्री १-** पश्यत, पुनरपि सा तत्रैव स्थिता किमपि चिन्तयति।

**स्त्री २-** तस्या मनसि किमपि विद्यते विकार।

**स्त्री ३-** अयि सुशीले! त्वरस्व त्वरस्व।

*(सुशीला स्त्रीभि मिलति)*

**स्त्री ४-** अद्य विलम्बो जात।

**स्त्री ३-** अद्य तक्रविक्रयार्थं दूर गन्तव्यम्।

**स्त्री ५ -** तक्रविक्रयव्याजेन इति वक्तव्यम्।

**स्त्री २-** कथ व्याजो नाम।

**स्त्री ३-** शृणुत अस्या जल्पितम्। तक्रविक्रयो नाम अस्माक जीविका। तत्र को नाम व्याज।

**स्त्री ५-** अय हि गृहाद् बहिरागन्तु व्याजोऽस्माकम्।

**स्त्री ४-** सत्यमियमाह। यदि न गृहाद् बहिर्गच्छाम तर्हि कुलवध्व इन असूर्यम्पश्या भविष्याम। गृहे मरिष्याम।

**स्त्री ३-** मरण तु अत्रापि।

**स्त्री ४** *( जनान्तिकम्)* शृणुत। अस्या सुशीलाया दृष्टिर्देया।

**स्त्री ५-** किमर्थम्?

**स्त्री ४-** को विश्वासस्तस्या? कुत आयातेय, कुतस्त्येयं, कोऽपि न जानाति।

**स्त्री ३-** एवम्, एवम्। कदाचित् वञ्चयित्वा भोलुक पलायिष्यते सा। तदा अपयशस्त्वस्माकमेव स्यात्।

**स्त्री २-** सत्यम्,सत्यम्। अद्यावधि न ज्ञातम्, केय, कुतस्त्येय, कुत्र चास्या अधिष्ठानम्।

**सुशीला-** ***(पृथक् भूत्वा प्रेक्षकान् प्रति)*** - सत्यम्, सत्यम्। न ज्ञायते कीदृश मे विज्ञानम्, कुत्र मे अधिष्ठानम्। विस्मर्तुमीहे सर्वं विज्ञानम्, सर्वं च अधिष्ठानम्। सर्वमपि विस्मर्तुमीहे।

**स्त्री ३-** पुनरपि सा कुत्रापि विलीना ।

**स्त्री ४-** मन्ये मनसि निलीना ।

**स्त्री २-** महान् विलम्बो जायते।

**स्त्री १-** दिनमणि प्रचण्डायते। तक्र क्षीणायते।

**स्त्री २-** चल चल चलाम।

**स्त्री ३-** अद्य केन पथा याम?

**स्त्री ४-** पश्य अमु पन्थानम्। यदि गम्येत अनेन, तर्हि अय गच्छति काशीम्।

**स्त्री ५-** न, न न । न वय काशी यास्याम।

**अपरा सर्वा** - ननु किमर्थम्?

**स्त्री ५-** कि न श्रुतम् भवतीभि? तत्रत्यो नृप अग्निदाहेन मृत। तदनु तस्य पितृव्यो राजा अभवत्। सोऽपि सम्प्रति दिवङ्गत। काशी श्मशानायते। कस्तत्र त्रायते। तत्र राजा न राजते।

**स्त्री ४-** अस्तु तर्हि। इम पृष्ठत पश्यत पन्थानम्। यदि गम्येत अनेन, तर्हि अय गच्छति मथुराम्।

**स्त्री १-** न न न । न वय मथुरा यास्याम।

**अपरा सर्वा** - ननु किमर्थम्?

**स्त्री १-** कि न श्रुतम् भवतीभि? तत्रत्या राज्ञी राजान हत्वा पलायिता।

**अपरा सर्वा-** अरे, एव किम्?

**सुशीला-** (सहसा) न, न। न सा पलायिता।

**स्त्री २-** अयि, तथ जानीषे त्वम्?

**स्त्री ३-** इयमित्थ वदति तथा राज्ञी न स्यात् सा, अस्या मुखलग्ना सखी स्यात्।

***(सर्वा हसन्ति)***

**स्त्री १-** अस्तु तावत्। विवादेन किम्? न वय काशी यास्यामो, न वा मथुराम्। वयमिहैव विक्रेष्याम स्वीय तक्रम्।

***।।समूहगीतम्।।***

*काशी न यामो, मथुरा न याम*
*यामो ग्रामम् स्वीयम्।*
*नो हर्म्य नो रथमिच्छाम*
*इच्छाम स्वीयकुटीरम्।*

**स्त्री ५-** अह तु वाञ्छामि कुत्रापि न व्रजाम।

**अपराः सर्वा** - ननु किमर्थम्?

**स्त्री ५-** अरे क क्रीणाति तक्रममुष्मिन् ग्रामे? विप्रवध्वस्तु दानमिव तक्र गृह्णन्ति।

**स्त्री ४-** सत्य वदसि। यदि ठक्कुरवीथ्या व्रजामस्तर्हि तत्रत्या गृहिण्योऽपि ऋण कृत्वा तक्र गृह्णन्ति।

**सुशीला-** ईदृशा इदानीन्तना क्षत्रिया। ऋण कृत्वा तक्र पिबन्ति न घृतम्।

अपरा सर्वा - ननु पश्यत किमिय वदति महादेवी!

**स्त्री ३-** कस्मिंश्चिद् गृहे कश्चन पुरुषो गृह्णाति तक्रम्। स तत्काल मूल्य ददाति। परन्तु तस्य दृष्टि— अहो बलवद् बिभेमि तस्या दृष्टे—

**स्त्री २-** सत्यमियमाह। एवविधा एव भवन्ति पुरुषा। तस्मिन् दिने सुनीताया पतिरेना ***(तृतीयां निर्दिश्य)*** हस्तग्राह अन्त प्रवेशयितुमियेष, तत प्रभृतीय बिभेति।

**स्त्री ५-** न इदानी भेतव्यम्। यावता बिभेम, तावतैव भाययन्ति पुरुषा अस्मान्। यदि साहस कुर्मस्तर्हि न किमपि कुर्यात् पुरुष।

**स्त्री १-** सत्यम्, सत्यम्। स्त्री आत्मनैवात्मानमुद्धरेत्। आत्मनैव तया जीवितव्यम्।

**सुशीला-** जीविष्यति स्त्री। मरिष्यति पुरुष।

**स्त्री २-** शृणुत अस्या वाकोवाक्यम्। काम तु तूष्णी तिष्ठति, यदि वदति तर्हि एव वदति यन्न ज्ञायते कोऽस्या अभिप्राय।

**स्त्री ५-** आस्ता तावत्। विवादेन किम्?

**स्त्री २-** तथापि किमर्थमिय एवमाह?

**स्त्री ३-** सत्यम्, सत्यम्। किमर्थमिय एवमाह?

**स्त्री ५-** अस्तु तावत्। कियच्चिरमिह स्थास्याम? अग्रे व्रजाम। भूयान् भवति विलम्ब।

**स्त्री २-** भवतु विलम्ब। अद्य स्पष्टा वार्ता करणीया अनया। भोलुक सर्वा न भ्रातृजाया इति सम्बोधयति। व्यसने वा विपदि वा स भवति न सहायक। तस्य कारणात् बहु मन्यामहे एनाम्। सह आनयाम एनाम्। अनयापि अस्माक मानो रक्षणीय। किमर्थमिय कर्तरीमिव चालयति निरर्थ जिह्वाम्? किमर्थं वदति यद्वा तद्वा? किमर्थं न नियन्त्रयति जिह्वाम्? किमर्थमिय एवमाह यज्जीविष्यति स्त्री। मरिष्यति पुरुष इति? कस्य पुरुषो मरिष्यति? ***(सुशीलां प्रति)*** वद तावत्!

**स्त्री ३-** एवम्, एवम्। ***(सुशीलां प्रति)*** वद तावत्। कस्य पुरुषो मरिष्यति? क हनिष्यसि त्वम्?

**स्त्री ५-** ननु वदामि— आस्ता तावत्। अल कलहेन।

**स्त्रियौ २,३-** तथाप्येषा प्रष्टव्या— कस्मै इय कथयति इत्थम् इति।

**स्त्री ५-** सुशीले, वद तावत्, कस्मै कथयसि स्म- मरिष्यति पुरुष इति? कस्य पुरुषो मरिष्यति?

**सुशीला-** ननु स एव य नास्ति कस्या अपि पुरुष।

**स्त्री २-** पश्यत, पश्यत तावत्। यत्पूर्वं भणति स्म, तदेव विपर्यासयति।

**स्त्री ५-** मैव रे! व्यर्थमेव यूय उद्विजध्वे। न सा किमपि अन्यथा मनुते।

**स्त्री ३-** भगिनि, नाय वृथा उद्वेग। सुशीला तावत् स्पष्ट वदतु कस्या कृते अनया

तथा उक्तम् इति।

**स्त्री १-** एवम् एवम्। यदि मनसि नास्ति कपट कोपि, तर्हि कि नाम भय कथने?

**स्त्री ५-** उक्तमेव तया। न तस्या अभिप्राय कमपि पुरुष प्रति। अधुना न वृथा वार्ता वर्धाप्या।

**स्त्री ३-** न। वार्ता तु अत्रैव समाप्ति नेया। (सुशीला हस्तेन गृहीत्वा कर्षन्ती) इदानी कथनीय त्वया केन अभिप्रायेण तथा उक्त त्वया। वद!

***(उभे स्खलतः। सुशीलायाः हस्ताद् तक्रस्य भाण्ड भूमौ पतति। भाण्डं भग्नम्। सुशीला चीत्करोति।)***

**सुशीला-** कि कृत त्वया? मम कर्करी पातिता।

***(सक्रोधं अङ्गारप्रखराभ्या नेत्राभ्यां तृतीयां स्त्रिय निर्वर्णयति)***

**स्त्री ३-** ***(हतप्रभेव)*** न मया जानन्त्या किमपि कृतम्।पश्य, पश्य भगिनि, कथ निर्वर्णयति माम्। एषा कथनीया- न मा एव पश्येत् इति।

***(सहसा तृतीयां स्त्रियां सरभसं आक्रामन्ती सुशीलां चतुर्थी पञ्चमी च निवारयतः। प्रथमा द्वितीया च तृतीयां गृह्णीतः।)***

**स्त्री ५-** पश्यत यूयम्। एव मिथ कलहो न शोभते। सुशीले, त्वमपि शान्ता भव इदानीम्। ***( तृतीयां स्त्रियं प्रति)-*** अधुना त्वयापि न किमपि वक्तव्यम्।

**सुशीला-** भग्न मम भाण्डम्। विलुलित मम तक्रम्।

**स्त्री ४-** सत्यमाह इयम्। भग्नमस्या भाण्डम्। विलुलित सर्व तक्रम्। अधुना कि भविष्यति?

**स्त्री १-** अत्याहित जातम्। पर कि क्रियेत?

**स्त्री २-** न किमपि कर्तुं शक्यते। भोलुकस्य क्रोध तु जानीथ एव यूयम्।

**स्त्री ४-** एवम्, एवम्। यदि भोलुकेन ज्ञात यदस्या तक्रभाण्ड भग्न तर्हि न स मर्षयिष्यति—

***(सुशीला सहसा फूत्कृत्य रोदिति।)***

**स्त्री १-** अरे, पश्यत पश्य! रोदिति खल्वियम्!

**स्त्री ५-** अयि सुशीले, अल रुदितेन। सर्वम् उपपन्न स्यात्।

**स्त्री २-** एव कुर्म स्व-स्व-भाण्डेभ्य स्वल्प स्वल्प तक्रमादाय अस्यै दद्म। तत्र वर्तते कुम्भकारपल्ली। ततो मृद्भाण्डमपि एक क्रीत्वा दद्म।

**स्त्री ४-** तथापि जानीथ यूय भोलुकस्य प्रकृतिम्। यदि कथञ्चित् तेन ज्ञात — पातितमनया भाण्ड विकीर्णं च तक्रमिति, तदा भृशमिमा स ताडयिष्यति,

कुट्टयिष्यति--

*(सुशीला सहसा अट्टहासं कर्तुं प्रवृत्ता)*

**स्त्री ३-** पश्यत पश्यत कथ हसति इदानीम्! अश्वेव ह्रेषा कुर्वन्ती!

**स्त्री ५-** किमिदम्? कोऽय हास?

**स्त्री २-** पत्यु पादप्रहारो यदा प्राप्स्यते, तदा सर्व विस्मरिष्यति हासम्—

**सुशीला-** नाह पादप्रहारसहनाय जातास्मि—

**स्त्री १-** तर्हि किमर्थं जातासि महादेवि!

*(सुशीलां अनुत्तीर्यं अट्टहासं निरन्तरयति।)*

**स्त्री ४-** अपि विक्षिप्ता जाता?

**स्त्री ३-** प्रष्टव्येयम्- कि कारणम् अस्या हासस्य—

**स्त्री ५-** सुशीले, इदानी विरम हासात्। वद तावत् - कि नाम सञ्जातम्। त्व सहसा रोदिषि स्म, तदनु च हसितु प्रवृत्ता। अत्र कि रहस्यम्?

**सुशीला-** श्रोतुमिच्छथ?

**सर्वाः-** (सुशीला परिवार्य) अथ किम्? श्रोतुमिच्छाम।

सुशीला- सम्पूर्णा कथा श्रोतव्या। श्रुत्वा मन्तव्या।

**स्त्री ५-** अस्तु तावत्। सुशीले, श्रावय स्वीया रामकथाम्।

**सुशीला-** शृणुत तर्हि।

**सर्वाः-** ***(परस्परम्)***- शृणुत , शृणुत, तूष्णी भूत्वा शृणुत।

**सुशीला-** हत्वा नृपम्—

**सर्वाः-** हत्वा नृपम्?

**सुशीला-** हत्वा नृप पतिमवेक्ष्य भुजङ्गदष्टम्—

**सर्वाः—** अवेक्ष्य भुजङ्गदष्टम्?

**सुशीला-** देशान्तरे स्वयमह गणिकास्मि जाता।

**सर्वाः-** देशान्तरे स्वयमहो गणिकाऽसि जाता?

**सुशीला-** पुत्र पति समधिगम्य च वृक्षदग्धम्—

**सर्वा-** पुत्र पति समधिगम्य च वृक्षदग्धम्?

**सुशीला-** शोचामि गोपगृहिणी कथमल्पतक्रम्। शोचामि गोपगृहिणी कथमल्पतक्रम्।— अपि ज्ञातम्?

**सर्वा-** किमपि न ज्ञातम्।

**सुशीला-** तर्हि विस्तरेण श्रावयामि। शृणुत।

**सर्वा-** अवहिता स्म।

**सुशीला-** ***(कथा श्रावयन्ती)*** सुखमासीत् तदानीम्। परन्तु सुखानुभूतिर्मया न ज्ञाता। मम भर्ता मम सकाशमासीत् तदानीम्। परन्तु स मया अनादृत। अनादृत्य स्वभर्तार कि मया अवाप्तम्? कीदृशी अहमास, कीदृशी जाता! नहि नहि, अह सैवास्मि, याहमासम्।

***(परिक्रम्य)*** तर्हि एव जानन्तु, अह पण्डितदेवशर्मणो भार्यास्मि। इमे मे गृहा सन्ति। अत्र अह निर्वतयामि स्वगार्हस्थ्यम्। दारिद्र्यकर्षित मम गार्हस्थ्यम्।

***(स्मृतिदृश्यम्। देवशर्मणो गृहम्। सुशीला तत्र सम्मार्जन्या मार्जनं करोति। मध्ये मध्ये शिशोः क्रन्दनम्।)***

**सुशीला-** ***(आकार्य)*** अपि शृणोति भवान्? किशनो रोदिति। ***(आत्मगतम्)*** न किमप्युत्तरम्। अय पुरुष अस्ति? एकमपि लघुकार्य न कर्तु प्रभवति। भार्या कर्मणि व्यग्रा। अय स्वल्पमपि साहाय्य न करोति। मा करोतु अन्यत् किमपि, बालकमेव सम्भालयेत्। तदपि न!

***(ततः प्रविशति विहितस्नानो देवशर्मा। स्तोत्रपाठेन सह क्लिन्नानि वस्त्राणि शोषणाय तानि प्रसार्य क्षेपणमभिनयति।)***

**देव०-** नमामीशमीशाननिर्वाणरूपम्, विभु व्यापक ब्रह्मवेदस्वरूपम्—***(सुशीलां प्रति)*** बालकम् गृहाण। स रोदिति। ***(पुनः पठति )***- अज निर्गुण निर्विकल्प निरीहम्—

**सुशीला-** ***(साक्रोशम्)***- अरे, इदानीमेव सम्मार्जन कृत मया। त्व पङ्कावृतौ पादौ स्थाप्य इतो निर्गतोऽसि। स्वय स्नात्वा स्नात्वा पवित्रता प्रदर्शयसि, गृहे च मालिन्य विकिरसि। किशन उत्थापनीय इति उक्तवती अस्मि। तस्य तु भारो मयैव वोढव्य।

**देव०-** मम स्तोत्रपाठम् अवशिष्टम्। त्वमेव उत्थापय श्रीकृष्णम्। ***-(पुनः पठन्)-*** चिदाकाशमाकाशवास गिरीशम्—स्फुरन्मौलिकल्लोलिनीचारुगङ्गा। लसद्भालबालेन्दुकण्ठे भुजङ्गा—

**सुशीला-** स्तोत्रपाठेन उदर पूरयिष्यते किम्? ईश्वरोऽपि दुःखार्ताना न शृणोति आह्वानम्। गृहे अन्नस्य कणोऽपि नास्ति। दुग्ध न निस्सरति मम वक्षस। त्व कुरु स्वकीय नमामीशमीशानम्। किशन बुभुक्षित। कि करोषि त्वम्? न किमपि कार्य, न कश्चन व्यवसाय।

**देव०-** चलत्कुण्डल शुभ्रनेत्र विशालम्, प्रसन्नानन नीलकण्ठ दयालम्।- परेद्य एव कथावाचन कृत मया पटेलस्य गृहे। दक्षिणाया पञ्चरूप्यकाणि उपायनान्न च तुभ्यमेव दत्तानि। — मृगाधीशचर्माम्बर मुण्डमालम्—

**सुशीला-** मया भक्षितानि तानि पञ्चरूप्यकाणि, अन्न च। अह डाकिनी अस्मि।

चत्वारि रूप्यकाणि वणिजा स्वायत्तीकृतानि। तस्य ऋण निर्यातनीयमासीत्। एकेन रूप्यकेन यद् अट्ट क्रीत तेन दिनत्रय निर्वाहित मया। अधुना असमर्था अहम्। नाह गृहमेतद् सम्भालयितु शक्ता। किशन क्षुधार्तो विलपति, त्व च निध्यायसि स्वकीय पुस्तकपत्रादिकम्। एक वस्त्रमपि शोभन नास्य मे तनयस्य तनौ
वर्तते।

***(इति फूत्कृत्य रोदितु प्रवृत्ता। शिशो क्रन्दनस्य तीव्र स्वर तेनैव सह उत्तिष्ठति।)***

**देव०-** न जानामि योग जप नैव पूजा-- नतोऽह सदा सर्वदा शम्भु तुभ्यम्-- ***(बालक उत्थापयति। बालकस्य क्रन्दन तीव्रतरं भवति।)*** अले, अले-- चुच्चुच्चु-- मा रोदी, मा रोदी! त्व बुद्धिमानसि। ज्ञानवानसि, महानसि। ***(सहसा सक्रोधम्)***- अरे दुष्ट, अधम, तूष्णी तिष्ठ। निरन्तर रोदिति, अनवरत रोदिति। तूष्णी न भवति। चपेटामेका दास्यामि। ***(सुशीलां प्रति)*** गृहाण स्वतनयम्। अय तूष्णीमेव न भवति। रुदन्नस्ति, न विरमति।

***(सुशीला सक्रोधं त दृष्ट्वा सम्मार्जनी एकतः प्रक्षिप्य बालकं उत्थापयति। बालकस्तूष्णी भवति।)***

**देव०-** यत प्रभृति अशुद्ध नाम अस्य मणिबन्धे उत्कीर्णम्- किशन इति-- तत प्रभृति बालकोऽय गर्त गत। बुद्धिरेवास्य भ्रष्टा।

**सुशीला-** पुनरपि तदेव रटनम्। किशन इति नाम मे पुत्रस्य। तदेव उत्कीर्ण तस्य मणिबन्धे। त्व शुद्धम् अशुद्ध वा दर्श दर्श वृथा जीवन यापय। तेनैव स्वोदर पूरय।

**देव०-** अरे मूर्खे! कियद्बार कथित मया यत् किशन इति नाम न भवति। तस्य नाम वर्तते श्रीकृष्णशर्मा। श्रीकृष्णशर्मा इति नाम उत्खातव्यमासीत् हस्ते। अधुना आजीवनम् अशुद्ध नाम वक्ष्यति स्वहस्ते अयम्। नैतन्नाम व्यपगत स्यादस्य हस्तात्। यन्मनसा मनुषे, तदेव करोषि। प्राक् अह प्रष्टव्य आसम्, यदा उत्कीर्ण नाम--

**सुशीला-** अस्माभिस्तु किशन इत्येव नाम विहितम्, किशन इत्येव आह्वयाम लालित स्वदारकम्। ***(तनय लालयन्ती)***- अरे मम राजपुत्र! मम किशन! बुभुक्षितो वर्तते, तथापि सुप्त। ***(देवशर्माणं उपलभमाना)***- पालनाय समर्थो नासि, तनयस्तु जनि नीत--

**देव०-** ***(हसन्)*** तनयो जनि नीत एतदेव महत्कर्म कृतम्।

**सुशीला-** एतस्य उदरपूर्तेर्दायित्व ममैव वर्तते, नैव किम्? अय तव कोऽपि न भवति? कि दत्त त्वया अस्मिन् गार्हस्थ्ये मह्यम्? केवल दु खम्। गृहे एक

कटोऽपि नास्ति साधुर्यत्र कश्चिदपि यदि आयाति प्रतिवेशिनी तर्हि सा उपवेश्येत। सर्वा शाटिका- सर्वाणि परिधानानि मे शीर्णानि। सूची च सूत्र चापि प्रतिवेशाद् याचनीय भवति। तदानी प्रतिवेशिनी — सा— मिश्राणी— कथम् उपहसति माम्- तव मनसि एतेन पीडा भवति काऽपि? न भवति— अहमेव सर्वदा अरण्यरोदन करोमि—

**देव०-** पश्य, सुशीले। सन्तोषो मनसि धार्य। इदमेव जीवनम्। दु खानि आयान्ति यान्ति च। आयास्यन्ति कदाचित् शोभनानि दिनान्यपि।

**सुशीला-** कदा आयास्यान्ति तानि?

**देव०-** एकदा अस्माक तनयोऽयम् — श्रीकृष्ण — राजा भविष्यति—

**सुशीला-** राजा तु वर्तते एव अयम्। मम तनयो — मम किशन—

**देव०-** ***(संशोधयन्)*** श्रीकृष्ण इति वक्तव्यम्, न किशन। न तथाविधो राजा यथा त्व मनुषे। अय सत्यमेव राजा भविष्यति।

**सुशीला-** ***( सोत्प्रासम्)-*** आस्ताम्, आस्ताम्। सञ्जातोऽय सत्यमेव राजा।

**देव०-** ***(सक्रोधम्)-*** अप्यहम् असत्य ब्रूमि? अयि मूर्खे! राजयोगो वर्तते अस्य बालकस्य जन्मपत्रे। मम विद्याया न विश्वसिषि? मया यस्य यस्य यत् यत् फलित प्रोक्त तत् तत् तस्य कदापि मिथ्या जात किम्?

**सुशीला-** जानामि जानामि ज्योतिषाचार्य महाराज! सत्यमेव भवन्तो महान्तस्त्रिकालदर्शिनो योगिनो ज्ञानिनो ध्यानिन सन्ति। सर्वं भूत च भविष्यच्च करतलगतामलकवत् भवता दृष्टौ भासते। केवल
वर्तमाने नास्ति भवता प्रभुत्व किमपि। अस्तु तावत्। अस्या दीनाया अपि भविष्य ब्रुवन्तु मनाक्। अनया कदा अस्माद् दारिद्र्याद् मुक्तिर्लप्स्यते? अयमाशयो यत् कदा मम मरण भविष्यति— इत्येतावन्मात्र निर्दिश्यताम्—!

**देव०-** तव मरणमेव न भविष्यति। त्व बहून् हत्वा मरिष्यसि।

**सुशीला-** कथ कथमाह? यथाऽह काचन पापाचारा जिघासु स्याम्।

**देव०-** मम मरण त्वत्त प्राग् भविता।

**सुशीला-** ***(सरभसं करतलेन तस्य मुखमावृणुते)-*** मा तावत्। न कदापि मुखादेवविध वचन निस्सारणीयम्।

**देव०-** ***(सलज्जं हसन्)-*** अरे इय स्त्री वर्तते डाकिनी वा?

**सुशीला *( सहसा फूत्कृत्य रुदन्ती)-*** कथय कथय तावत्। यत्किमपि मनसि स्यात् तत् कथय। तथाविधा एवाहम्। तव कृते कि कि न मया सोढम्। आदिवस आरात्रि व्यग्रास्मि गृहकार्ये— कस्य कृते? तथापि डाकिनी अहम्। सर्वदा मया तव

अन्याय सोढ। कि प्राप्त मया विवाहानन्तरम् अस्मिन् गृहे, वद तावत्— कि मया प्राप्तम्?

**देव०-** न किमपि। एतदेव भाग्यम्। अयमेव ससार। अत्र एतत्सर्व सोढव्यम्।

**सुशीला-** कियत्काल सोढव्यम्? कियत् सोढव्यम्? किमर्थं न करोषि किमपि? इद दारिद्र्य मनाक् तु व्यपगच्छेत्— इद प्रतिदिन जागरिताया पिपासाया कूपखननम्—

**देव०-** कि कुर्याम् सुशीले? सनातनोऽह ब्राह्मण। स्वधर्म त्यक्तु नोत्सहे। भिक्षा न याचिष्ये। श्रम कर्तुं शक्नोमि। परन्तु क भाटकेन कारयिष्यति श्रम मया अस्मिन् ग्रामे? यदि गच्छामि भारवाहो भवितु, आजीविको वा भवितु, तर्हि साञ्जलि ते कथयिष्यन्ति- भवता भृत्यकार्य कारयित्वा कथ पापभाजो भवाम ब्राह्मणदेव! इति। एव देवोऽह जातस्तेषा कृते। देवो भूत्वा बुभुक्षया म्रिये। देव याचितु न शक्नोति, कार्य कर्तुं न शक्नोति। तस्मै तु यदा नैवेद्यमर्प्यते तदाऽसौ तद् गृह्णाति—अन्यथाऽसौ निष्क्रिय स्थित—

**सुशीला-** तर्हि एवमेव निष्क्रिय आस्व ब्राह्णदेव! काम म्रियेता तव भार्या पुत्रश्च—

**देव०-** ***(सखेदम्)***- एव तु नास्ति सुशीले! कार्यं तु चलत्येव! पश्य, गतवर्ष मया भागवतप्रवचनानि विहितानि। कियान् दक्षिणाराशिरवाप्त! चत्वार पञ्च वा मासा यापिता एतावत् धान्यमपि लब्धम्। नैव किम्?

**सुशीला-** त्रयो मासा कथञ्चिद् यापिता यत्किमपि प्रवचनैर्लब्धमासीत्, तेन। सम्पूर्णे वर्षे सकृद् भागवतवाचन कि विहित श्रीमता वय तु सर्वथा अनर्थसागरादुद्धृता।

**देव०-** पुनरपि कश्चित् भागवतप्रवचन कारयिष्यति।

**सुशीला-** अस्मिन् ग्रामे स्थाय स्थाय किमपि न स्यात्। कियद्बार उक्तवती अहम्? अत्रत्या जना स्वयमेव बुभुक्षया म्रियन्ते। तत् क कारयिष्यति भागवतम्, कश्च दास्यति दक्षिणाम्? कियता कथयिष्यामि — चल, चैनपुर गच्छाव। तत्र मम पितृव्यो वसति। स आकारयति आवाम्। तत्र किमपि कार्यं न वर्तते। केवल सुखेन भोक्तव्यम्। स तु केवल तादृशमेक जन वाञ्छति यस्तस्य सम्पत्ति निरीक्षेत—

**देव०-** पुनरपि सैव वार्ता? स्वकीय ग्राम त्यजामि? इयमस्माक पूर्वजाना भूमिर्वर्तते।

**सुशीला-** अहमपि तु स्वपूर्वजाना भूमि त्यक्त्वा तव कारणादिह समागता। यावच्छक्य निर्वाह कृत अधुना न शक्नोमि निर्वहितुम्। अय किशन— अस्य क्रन्दन श्रोतु न पारयामि। यावदय न सञ्जात आसीत्, तावत् कथा अन्या आसीत्। किमह अपदार्थं ब्रवीमि? यदि वृथा किमपि मयोक्त स्यात् तर्हि

वद। त्वमेव तावत् चिन्तय। त्व तावदेतावान् ज्ञानी ध्यानी पुरुष। एतावान् बुद्धिमान्। इद तावत् किमर्थं बोद्धु न प्रभवसि? मम पितृव्य – स स्वार्थेन नैव आकारयति अस्मान्। तस्य स्नेहो नास्ति किम्? तस्य अग्रे कोऽपि न, पश्चात् कोऽपि न। सर्वां भूमि सर्वां सम्पद अस्यैव किशनस्य कृते त्यक्त्वा गमिष्यति परलोक स। अन्यच्च त्वमेवोक्तवानसि यदय किशनो राजा भविष्यति। कथ भविष्यति अय राजा? अस्मिन् ग्रामे तावत् स्थित्वा तु अय राजा न स्यात्। अपि अह असत्य वदामि—ब्रूहि तावत्?

**देव०- *(निर्विण्णः सन्)-*** स्त्रिया हठो भवति अत्यन्त प्रबल। स्त्रीहठ पुर कस्य वश? यदि बलवास्तवाग्रहस्तर्हि एतदपि कृत्वा दृश्यताम्। परन्तु परिणामो भयावहो भविष्यति— पूर्वमेव वदामि—

**सुशीला-** बुभुक्षितास्तु न मरिष्याम इह। पश्य, मा सन्ताप वह। यदि न निर्वाह स्यात् तर्हि पुनरपि परावर्तिष्यावोऽस्मिन्नेव ग्रामे। कतिचन दिनानि तत्र स्थित्वा दृश्यता चैनपुरे। यदि तत्र मनो न रमेत, तर्हि पुनरिह आगमिष्यावो ग्रामे।

**देव०- *(निःश्वस्य)-*** एव भवतु तर्हि——

***(समूहगीतम्)***

विधिरिह जात कथ नु वाम
परमसुखदो मनोभिराम,
त्यक्त स्वीय सोऽपि ग्राम
अग्रे चरणौ काम चलितौ
मनसि जनौ द्वौ शङ्काकुलितौ
पुरतो यातो रिक्तशरीरे,
धावति चित्ते पृष्ठेऽधीरे
द्यूतक्रीडाऽथवा जीवन रण
प्राणाना विहितो यत्र पण
मनसि प्रभवति काम काम
विमृशति चान्यत् प्रभु स राम।

**सुशीला- *(सखीसमूहं प्रविश्य, कथां श्रावयन्ती)-*** अह मुहुर्मुहुर्निवारिता पतिना। स मा समबोधयत्- ग्राम नैव हातव्यमिति। तथापि मया न स्वीय आग्रह शिथिलीकृत। किशनेन तेन च सह अह ग्रामात् प्रस्थिता। सा यात्रा! सैव मम जीवने सर्वं विपर्यस्त व्यदधात्। पितृव्यसकाश गन्तु त्यक्तो ग्राम। परन्तु पितृव्यस्य ग्राम प्राप्तु न कदापि अशुक्नुवाव आवाम्। मार्गे भ्रान्ता इतो भ्रष्टास्ततो नष्टा।

महारण्यमासीत्। मार्गे सञ्जाता विषमा स्थिति।

***(पुनः स्मृतिदृश्यम्। सर्वा पञ्च सख्यः वृक्षाकृतीर्निर्माय अवस्थिता भवन्ति। ततः प्रविशतः सुशीला बालकमङ्के वहन्ती, पोट्टलिका मञ्जूषां च वहन् देवशर्मा। बालकस्य रोदनध्वनि उत्तिष्ठति, क्रमशः तीव्रात् तीव्रतरं भवति च)***

**सुशीला-** शृणु तावत्। किशनो भृश रोदिति। पिपासाकुलितो मे पुत्रक। यदि कुतश्चिद् जल लभ्येत—

**देव०-** जलम्! जल कुतो लभ्यते। स्थितो मध्याह्न। शून्यमिदमरण्यम्। नो दृश्यते निकषा सरो वा निर्झरो वा नदी वा। तथापि देहि पात्रम्। अन्विष्यामि जलम्।

***(सुशीला झोलकात् पात्रं निष्कास्य ददाति। देवशर्मा प्रस्थितः। बालकस्य रोदन क्रमशो मन्दायते।***

**सुशीला-** मन्ये स्वप्तुमिच्छति मम लालित। अय तपस्वी— मम राजपुत्र बुभुक्षित पिपासित। पुत्रक, केवल मुहूर्तमेक प्रतीक्षस्व। तदनु वय प्राप्स्यामो पितृव्यस्य ग्रामम्। तत्रगत्वा लप्स्यामहे विश्रामम्। समाप्स्यते इयमटाट्या। लप्स्यते सौख्यम्। तत्र भविष्यति केवल क्रीडनम्। अये, सुप्तो मम दुर्लालित। तर्हि एनमत्र शाययिष्ये। स्वपिहि, स्वपिहि मम पुत्रक! शीघ्रमेव ते पिता पानीयमादाय आयास्यति। ततो आवा पानीय पास्याव। ततो वय अग्रे गमिष्याम। ततो वय पितृव्यस्य ग्राम प्राप्स्याम।

***(बालकं भुवि शाययति)***

**सुशीला-** कीदृश निर्मक्षिक सर्वत्र प्रसृतम्। अहो तीक्ष्णता आतपस्य!

***(वृक्षीभूता पञ्च सख्यः सुशीलां परिवारयन्ति)***

**स्त्री १-** सुशीले विहरस्व मनाक्।

**स्त्री २-** पतिर्गतो जलमानेतुम्। बालकश्च स्वपिति। एहि, क्षण विहराम।

**स्त्री ३-** मा बिभेहि। रमणीय वन वर्तते। त्व कदापि गृहाद् बहिर्न निर्गता। एवमेव जीवन व्यपगतम्। अय ते रमणीय काल समागत—

**स्त्री ४-** बालकस्य काऽपि क्षतिर्न भविता। स सुख स्वपिति।

**स्त्री ५-** वय तस्मिन्नपि दत्तावधाना स्याम।

**स्त्री १-** अथ च वय विहरामोऽपि।

**सुशीला-** गच्छत यूयम्। नाहमागमिष्यामि।

**स्त्री १-** पश्य, अतिरमणीयानि कुसुमानि तत्र विकसितानि। तत्र तस्मिन् वृक्षे—

**सुशीला-** ***(सस्पृहं पश्यन्ती)***- अहो रमणीयता कुसुमानाम्।

**स्त्री २-** एहि, पुष्पाणि अवचिनुम। शृङ्गार करिष्याम पुष्पै। कियन्ति दिनानि

व्यतीतानि, त्वया शृङ्गारो न विहित।

**स्त्री ३-** एहि तावत्।

**स्त्री ४** - अल चिन्तयित्वा। अस्मिन्नेव चिन्तने जीवन वृथा गत ते।

***(सुशीला दोलायमानमतिरपि ताभिराकृष्यमाना याति। अथापरत प्रविशति राजा मणिभद्रसिंह)***

**मणि०-** मृगयाया मनो निवेशितम्। किन्तु कियत्काल यावत् अभिनिवेशोऽय प्रचलिष्यति। इद तावत् निरर्थक व्यसन मृगया नाम। अत्र भवति व्यर्थमेव इतस्ततो धावनम्। इतस्तत आहिण्डनम्। सर्वे मम अनुयायिन पृष्ठे क्वापि वियुक्ता। त हरिणमनुधावन्नह अत्र समागत। कियद्दूर समागतोऽस्मि इति न जाने। राजप्रासादे यदि भवामि तर्हि राज्ञी सुखेन उषितु न ददाति। सा पुत्र वाञ्छति। पुत्रो न जात। कियन्ति व्रतानुष्ठानानि यज्ञादीनि विहितानि। पुत्रो न जात। न जातस्तर्हि कि क्रियेत? ***(परिक्रम्य शयानं बालक दृष्ट्वा)-*** अयमत्र कस्यापि पुत्र! अरे कस्य पुत्रोऽयम्? ***(परितो दृष्टवा)*** न कोऽप्यत्र! इद तावदवगच्छामि यत् यानि बहूनि व्रतानुष्ठानानि यज्ञादीनि विहितानि तै प्रसन्नो विधाता। प्रसन्नेन विधात्रा दत्तो मह्य पुत्र। ***(उपगम्य)-*** अहो सुन्दरोऽय बालक। कस्य पुत्रोऽय स्यात्? यस्यापि स्यात्, स न मर्षयिष्यति यदि अह गृह्णामि एनम्। तथापि विजने वने इम परित्यज्य कथ गच्छेयम्? तर्हि कि कुर्याम्? उच्चै आकार्य पृच्छामि। ***(मन्दं मन्दमाकारयन्)-*** कोऽत्र भो! कस्याय बालक? न कोऽपि ददाति प्रतिवचनम्। तर्हि गृह्णामि बालकम्। हे प्रभो, हे विधात! अपि गृह्णामि बालकम्? मौन सम्मतिलक्षणम्। प्रभु कथयति गृहाण गृहाण। तर्हि गृह्णामि। अय उत्त्थापित, अय च गृहीतो बालक। इदानीमय मम पुत्रो जात— भवतु गच्छामि—

***(निष्क्रान्तो राजा मणिभद्रसिंहः। अथापरत: प्रविशति सुशीला।)***

**सुशीला-** ***(शून्यं स्थानं दृष्ट्वा, व्यग्रा)-*** मम किशन! क्व गत स? केन गृहीत? किशन, किशन! केनापि प्रेतेन पिशाचेन वा निर्गीणो मे पुत्रक! (विक्षिप्तेव इतस्ततो धावन्ती)- हे भगवन्, हे करुणानिधान, अधुना कि भविष्यति! नाह जीवितु शक्नोमि ऋते स्वप्राणप्रिय तनयम्! किमेतन्मया कृतम्! पञ्च सखीनामाग्रह मानयित्वा तनय एकाकिनम् उज्झित्वा इतो विनिर्गताऽहम्। अह क्रूराऽस्मि, अह पिशाचिनी अस्मि। मया भक्षित स्वदुर्लालित! ***(इति सोरस्ताड विलपति, क्रन्दति च। ततः त्वरितं परिक्रामन्ती अन्वेषणम् अभिनयति। अनन्तर सखीना मध्ये समेत्य पुनः कथां श्रावयन्ती)-*** तस्मिन् गहने वने इतस्ततो धावन्ती अह भृश अन्विष्यामि स्म स्वतनयम्। न कुत्रापि स दृष्ट। अन्ततोऽह तत् स्थानमपि

विस्मृतवती, यतो मे पतिदेवो जलमानेतु गत आसीत्, यत्र मया उज्झित आसीत् स्वतनय। त वृक्ष सप्रयासमपि परिचेतु न प्राभव, यस्य छायाया मया स्वापित आसीत् स्वपुत्र। मम पतिदेव तत्स्थानमागत स्यात्। तेन मम च स्वतनयस्य च अन्वेषणाय महान् सरम्भ कृत स्यात्। अन्विष्य अन्विष्य स नैराश्य प्राप्त क्वापि गत स्यात्। अह बुभुक्षिता पिपासिता अतितरा श्रान्ता कस्यचित् तरोश्छायाया निषण्णा कण्ठस्तम्भ यावत् पति च पुत्र च आह्वयन्ती आसम्। तदनु बलवती निद्रा जहार मे चक्षुषी। तथापि नाह सुप्ता। सायकाल आसीत्। वने तमिस्रा प्रसृता। तत्र आसीना अह स्वनयने उद्घाटयितु दृढ प्रयतितवती आसम्। पतिर्न मिलित, तनयो न मिलित, मिलितो मथुराधिपती राजा सबलसिह।

***(मञ्चस्यैकस्मिन् कोणे नितरा परिश्रान्ता उपविशति। )***

**सुशीला-** अधुना कि भविष्यति? अधुना अवसित जीवितप्रयोजनम्। असार ससार। मरणमेव श्रेय इदानीम्। हे ईश्वर, हे दयानिधान, न त्वया श्रुत मदीयमाह्वानम्। अधुना दयस्व मयि। प्रेषय कमपि वन्य हिस्र सत्त्व य कवलीकृत्य मा समापयेदिमा जीवनलीला मदीयाम्।

***(ततः प्रविशति राजा सबलसिहः)***

**सुशीला-** दोषस्तावन्ममैव वर्तते। पतिना कियन्न निषिद्धाऽहम्—

**सबलसिह-** ***(ससम्भ्रमम्)*** अरे क किमपि उक्तवान्?

**सुशीला-** ***(विक्षिप्तेव)*** अरे, अह किमपि उक्तवान्।

**सबल०-** त्व क?

**सुशीला-** त्व क?

**सबल०-** ***(सभयम्)*** अह सबलसिहोऽस्मि।

**सुशीला-** यदि त्व सबलसिहस्तर्हि अह प्रबलसिहोऽस्मि। ***(उन्मत्तेव अट्टहासं कुरुते।)***

**सबल०-** अरे कोऽसि त्वम्? जाल वा जम्बाल वा, प्रेतो वा पिशाचो वा? अरे मम सैनिका? क्व स्थ? पश्यन्तु, कीदृशे विपत्सागरे निपतितोऽस्मि! कोऽत्र भो! परित्रायतामय जन अस्या प्रेतबाधाया! ***(जिग्मिषुः प्रचलति, सुशीला विक्षिप्तहासं कुर्वाणा तं गृह्णाति।)***

**सबल०-** अरे, अरे, कथ कण्ठग्राह गृहीतोऽऽस्मि! मुच्यता मम गल। हे मात! हे प्रभो! कीदृशे सङ्कटे पतितोऽस्मि! हे भगवति! त्रायस्व माम्!

**सुशीला-** त्व मा त्रायस्व, अह त्वा त्रायिष्ये।

**सबल०-** अह स्वयमेव भीतोऽस्मि। अह कथ त्वा त्रायिष्ये।

**सुशीला-** त्वमेव मा त्रातु शक्नोषि!

**सबल०-** कथम्?

**सुशीला-** मग पति पुत्रश्च अस्मिन् वने परिभ्रष्टौ। त्व अन्विष्यानय तौ।

**सबल०-** अस्मिन् तमसि? प्रात काल यावत् प्रतीक्षस्व। प्रात काले द्रक्ष्यसि मे प्रतापम्। मम सैनिका समस्त वनमालोडयिष्यन्ति।

**सुशीला-** तर्हि त्व मा अमुष्माद् वनाद् बहिर्नय।

**सबल०-** एतत् कर्तुं शक्नोमि। अनुगच्छ माम्। अथवा त्वमेव अग्रतो भव। अहमनुपद चलामि। ***(उभौ परिक्रामतः।)***

**सबल०-** इदानी कथय, काऽसि त्वम्?

**सुशीला-** अहमस्मि काचन दु खोपहता स्त्री।

**सबल०-** अहो, अहो, अपि दु खोपहताया स्त्रिया एतावान् साहसो भवति? तर्हि मम राज्ये सर्वा स्त्रियो दु खोपहता भवेयुरिति व्यवस्थामह कारयिष्यामि।

**सुशीला-** पुरुषाश्च तथैव भीरवो भवेयुर्यथा त्वम्— इमामपि व्यवस्था कारय।

**सबल०- कथं** भीरुरिति मामाह? न जानासि कोऽहम्?

**सुशीला-** त्व राजा सबलसिहोऽसि।

**सबल०-** अँय्! कथ त्वया ज्ञातम्?

**सुशीला-** त्वयैव इदानीमेव कथितम्।

**सबल०-** एवम्, एवम्। अहमस्मि सबलसिहो नाम राजा। परन्तु त्व कीदृशी स्त्री? त्व मा दृष्ट्वा न बिभेषि! सर्व जगत् बिभेति मत्त। जना कम्पन्ते मत्समक्षम्। त्व मामुद्दिश्य एव ब्रवीषि यथाऽह सबलसिहो न स्याम्, यो वा को वा स्याम्।

**सुशीला-** पति विहाय मत्कृते सर्वे जना तथाविधा एव।

**सबल०-** अहो, अहो, साधु साधु। हे भारतीयनारि! धन्यासि त्वम्। तवैव कारणात् सर्व जगत् अवस्थितम्। अन्यथा तु अस्मादृशा पापाना कारणादिय धरणी रसातल गता स्यादिदानी यावत्। तथापि, हे स्त्रि! पश्य, अहमस्मि राजा। त्वया अह बहु मन्तव्य।

**सुशीला-** राजा त्व स्या स्वराज्यस्य। कि ममैतेन? मम तु राज्यमासीत् स्वीये गृहे परिवारे च। तदेव सर्व विनष्टम्।

**सबल०-** अहो अहो, पुनरपि साधु भणितम्। मन्ये त्व काऽपि अनुपमा अद्भुता नारी वर्तसे। तर्हि प्राप्तवानस्मि तामद्भुता नारीं चिरादहम् अन्विष्यामि स्म याम्। सत्य वदामि। अन्त पुरिकाभ्यो भृशमुद्वेजितोऽस्मि। सर्वास्ता सुकुमार्य कोमलाङ्ग्य। तर्हि अद्य प्रभृति त्वमेव मम राज्ञीषु मूर्धाभिषिक्ता। एहि तावत् *(ता*

*हस्तेन गृह्णाति)*

**सुशीला-** मा तावत्-- ***(हस्त मोचयितु यतते। उभौ विकट परिक्रामतः)***

**सुशीला-** ***(सखीना समाजमेत्य पुनः कथा श्रावयन्ती)-*** सबलसिहो मा स्वप्रासादे नीतवान्। स मा आश्वासयति स्म - तव पति पुत्र चान्वेष्य आनयिष्य इति। तत्प्रत्ययादह तदीये प्रसादे उषितवती। मासो व्यतीत, मासद्वय व्यतीतम् मासत्रय च विगतम्। पत्यु पुत्रस्य च काऽपि नावापि वार्ता। सबलसिहस्य अबला मा प्रति आग्रहो प्रबलायित। अह असकृत् त न्यवेदयम्- पति विहाय नान्य नर भजिष्येऽहमिति। परन्तु तस्या दशाननाधिष्ठिताया लङ्काया सीतेव शील रक्षितुमह नाशक्नुवम्। स निर्जीव वस्तुरिव मामात्मसादकरोत्। नासीत् तस्य लालसाया अन्त। सोऽनिश मा परित एव बम्भ्रमीति स्म। जानाति स्म- अद्यापि मदीय हृदय आकुल वर्तते पत्यु पुत्रस्य च कृते। स बिभाय- कदाचिदह प्रासाद परित्यज्य गमिष्यामीति। स नितरा विचारमूढ भीरुश्चासीत्। सर्वा मदीया राज्य मामुद्दिश्य दुरभिसन्धौ लग्ना सन्ति, मदीया मन्त्रिणो मद्घाताय बद्धदृष्टय सन्तीती स प्रत्यैति स्म। एव स्थिते स केवल मयि विश्वसिति स्म। अथवा सर्वत अविश्वासैश्छन्न स मयि प्रत्येतुमकामयत्।

अथ गच्छत्सु दिनेषु समाजगाम कार्तिकमास। अह कार्तिकस्नान नद्या करोमीति नियम। मया स उक्त- नाह स्वव्रत परित्यक्ष्ये इति। स कथञ्चिदनुमेने। अहम् उषसि उत्थाय नद्या स्नातुमगच्छम्। ततश्च शिवालये ईश्वरस्य दर्शनमकरवम्। एवमतीतानि दशदिनानि। पुनरपि महान् झञ्झावातो मम जीवने समायात------

***(स्मृतिदृश्यम्। ततः प्रविशति सुशीला पञ्चसखीभिः सह शिवालये दर्शनाय गच्छन्ती। सख्यो मन्दिरद्वारि अवतिष्ठन्ते।)***

**सुशीला-** अहम् अभिषेक पूजा च विधाय सपदि परावर्तिष्ये तिष्ठथ यूयमिहैव।

***(देवालये प्रवेशं नाटयति)***

**स्त्री १-** ***(जनान्तिकम्)*** अस्माभिस्तया सह गर्भगृह गन्तव्यम्।

**स्त्री २-** वयमस्नाता। कथ अन्त प्रविशाम।

**स्त्री ३-** न, न। वय राजसेविका। राज्ञ आदेश प्रथम माननीय।

**स्त्री ४-** अरे गर्भगृह प्रविश्य सा तिरोहिता भविता किम्? मार्गस्तु यथा प्रवेशस्य तथा बहिर्गमनस्य एक एव। वय द्वारि तिष्ठाम। सम्पादयतु सा सपर्याम्।

**स्त्री ५-** अनुल्लङ्घनीयो महाराजस्य आदेश। (प्रथमा, द्वितीया चोद्दिश्य)- गर्भगृह गच्छत युवाम्। वय तिस्र इह तिष्ठाम।

*( सर्वा परिक्रामन्ति। सुशीला द्वाभ्या सखीभ्यामन्त प्रविशति। गर्भगृहस्य एकस्मिन्नन्धाकारावृते कोणे देवशर्मा ध्यानमग्नः स्थितः।)*

**सुशीला-** *(नाट्येन अर्चयित्वा)* हे प्रभो, हे भगवन् करुणावरुणालय शम्भो, देहि मह्य मुक्तिम्। मोचय मामस्मात् प्रपञ्चात्।

**देव०-** नमामीशमीशाननिर्वाणरूपम्---विभु व्यापक ब्रह्म वेदस्वरूपम्--- अज निर्गुणम्---

**सुशीला-** (सोच्छ्वासम्, नितरा व्याकुला)- अरे कोऽय स्तुति गायति तत्र?

**स्त्री १-** पूजको वर्तते भट्टिणि!

**सुशीला-** जानाम्यह अस्य देवालयस्य पूजकम्। नाय स जन।

**स्त्री २-** कश्चन आगन्तुक प्रतीयते। यावत् देवी अत्र पूजा करोति तावत् पूजक विहाय न कोऽप्यन्यो जन प्रविशेत् गर्भगृहम् इति राजाज्ञा अनेन न विदिता स्यात्।

**देव०-** चिदाकाशमाकाशवास गिरीशम्---

**सुशीला-** ननु स एवायम्।

**स्त्री १-** कोऽय भट्टिणि!

**सुशीला-** (सहसा सचेतना भूत्वा)- अयम्-- स एव यो मया आकारित। अय काशीनिवासी महान् पण्डित। महामृत्युञ्जयमन्त्रकोटिजपार्थ मया सङ्कल्पो गृहीत, तदर्थ चाय निमन्त्रित। युवा क्षण बहिस्तिष्ठतम्। अहमनेन विशिष्टपूजाविधानमधिकृत्य चर्चा करिष्ये।

**स्त्रियौ १,२-** यदाज्ञापयति भट्टिणी।

**सुशीला-** *(देवशर्माणमुपसृत्य)* - शृणु तावत्।

**देव०-** नतोऽह सदा सर्वदा शम्भु तुभ्यम्। *(इति सुशीलामदृष्ट्वा स्तोत्रपाठं समाप्य शिवलिङ्ग प्रणिपतति)*

**सुशीला-** माम् अवलोकयितुमपि नोत्सहसे?

**देव०-** इदानी त्व परस्त्री जाता। अदर्शनार्हा जाता मत्कृते।

**सुशीला-** मामेकाकिनी तस्मिन् वने विहाय गतवास्त्वम्। किमर्थ गतवान्? किशन क्व वर्तते?

**देव०-** अह जलमादाय यदा परावृत्त, तदा तत्र न किशन आसीत्, न च त्वम्। मया अवगत तदानीम्- मायाऽपि याता, यातश्च रामोऽपीति। किशनस्तव सकाश नास्ति?

**सुशीला-** नहि, नहि! मम किशन! मया ज्ञात यत् स त्वया नीत स्यात्। *(फूत्कृत्य*

*रोदिति)।*

**देव०-** आश्वसिहि देवि! इदानी भवती राज्ञी वर्तते। नैतत् सामान्यस्त्रीव रोदन शोभते भवत्या कृते।

**सुशीला-** अह कापि नास्मि। अह राज्ञी नास्मि। केनैतद् भणित ते यदह राज्ञी जाता?

**देव०-** अह अतीतयो द्वयो दिनयोरिह प्राप्त मथुराम्। ह्यो दिनेऽपि त्व मया अत्र दृष्टा। अद्य इतो यास्यामि। केवल एतत् प्रष्टुमवस्थितोऽहम्— अपीदानी तु त्व प्रसन्ना?

**सुशीला-** कीदृशस्त्व विपरिवर्तित? कथमेव ब्रूषे मामस्मिन्नरके निपात्य?

**देव०-** अधुना प्रतिवेशिन्यस्त्वा नोपालभमाना स्यु — अधुना सीवनार्थं सूची च सूत्र च याचितु प्रतिवेशिगृह न गन्तव्य स्यात्। न चाधुना भवती रिक्तोदरेण स्वपितीति मन्ये—

**सुशीला-** त्व च? त्व कुत्र वससि? कस्ते आजीव इदानीम्?

**देव०-** मम क आजीव? यत्र स्थान लभे तत्र स्वपिमि। इतस्तत आहिण्डामि। कुत्रापि वसामि। नाधिक जीवितुमिच्छामि। मदीय ईश्वर। स मामाकारयति।

**सुशीला-** मा तावत्। मैव वद। गृह कथ न गतवान्? मया अस्माक ग्रामा भृशमन्विष्टा। बार बार सेवकास्तत्र प्रेषिता गत्वा विदितमेतत् कुर्वन्तु कश्चन ब्राह्मण देवशर्मा नाम तत्र वसति न वा— यदि नास्ति तर्हि ज्ञायते कुत्र गत इति— परन्तु न लब्धा काऽपि वार्ता।

**देव०-** गृह तु सर्व भग्नम्— तत्र गत्वापि किमहमकरिष्यम्?

सुशीला- किमेतत् जातम्? त्व सर्वथा विरागी जात। अस्थिमात्र शरीरम्। जीर्णानि वासासि।

**देव०-** शीर्यते इति शरीरम्। एकदा तु इद समग्रमेव विशीर्ण स्यात्। वासास्यपि जायन्ते जीर्णानि। मनुष्यस्तु स्थास्यति, मनुष्यस्तावत् स्थास्यति यावत्तस्य धर्म तेन सह वर्तते। मया बहु चिन्तित सुशीले! एकाकी एव नर इह आयाति, एकाकी च गच्छति। अत्र न कस्यापि केनापि वास्तविक सम्बन्ध। अतस्त्वया विस्मरणीयोऽय जन। इदानी त्वमसि राज्ञी। त्वया राज्ञीधर्म पालनीय। अहमपि स्वधर्म निर्वहामि।

**सुशीला-** (रुदती) मा तावत्। मैवं वद। ऋते त्वा च ऋते किशन च समस्त जगत् सर्वथा शून्यारण्य मे। विश्वसिहि मयि।

**देव०-** त्वमपि मयि विश्वसिहि। कालचक्रमेतत्। नैतत् विपरीत चालयितुं शक्यते।

अनुवर्तस्व राजानम्।

**सुशीला-** अह भृश जुगुप्से तस्मात् राज्ञ। परित्यक्तुमिच्छामि प्रासादम्। मोचय माम् कारागारात्। नय माम् इत क्वापि।

**देव०-** एतत् — इदानी— कथ सम्भाव्यते?

**सुशीला-** सर्व सम्भाव्यते। आवा मथुरातोऽन्यत्र गमिष्यावो निभृतनिभृतम्। अनन्तरमन्विष्याव स्वकिशनम्।

**देव०-** स यत्र कुत्रापि स्यात् सुखेन स्यात्। तमधिकृत्य अल चिन्तया। अवधत्स्व ममोपदेश हृदि। विस्मर माम्। विस्मर पूर्व जीवनम्। विस्मर पूर्वानुभूत दारिद्र्यम्। कश्चन पति पूर्वमासीदित्यपि विस्मृतिमुपैतु ते। तव सख्यो बहिस्तिष्ठन्ति। यावत्ता एतत् रहस्य जानीयुस्तावत् त्वमितो निष्क्रमस्व। अहमपि द्रुत स्थानमिद त्यजामि।

**सुशीला-** एव मा ब्रूहि। पादयोस्ते पतामि। ***(इति चरणौ तस्य गृह्णाति। देवशर्मा ससङ्कोच पृष्ठतः प्रसर्पति)।*** शृणु तावत्। अह रात्रौ इह आगमिष्यामि। त्वया अत्रैव मिलितव्याहम्। अनन्तरमावा सुगुप्तौ इतो निर्गमिष्याव।

**देव०-** नरो विरचयति सङ्कल्पम्, देवो विकारयति विकल्पै। एतदेव चिन्तय। तवाग्रहात् ग्रामस्त्यक्त पूर्वम्। तदा कि ज्ञातमासीत् आवाभ्या यत् सर्वमित्थ विपर्यस्त स्यात्?

**सुशीला-** अत एवाहमपि ब्रवीमि। ग्राम त्यक्त्वा तदानी महान् प्रमाद कृत। इदानी तत्प्रमार्जन करिष्ये। अह पितृव्यस्य गृहमपि गन्तु नेच्छामि। त्वमसि मम सर्वस्वम्।

**देव०-** पुनरपि विचारय। सुस्थेन चित्तेन सर्वमवधारय। मा भूयात् पुनरपि कृतस्य दुर्विपाक।

**सुशीला-** सर्वमवधारितम्। सर्व विचारितम्। इदानी न भविष्यति कापि त्रुटि काऽपि बाधा। मम किशनस्य शपथेन बद्धोऽसि। एष समय कृत। अवश्यमत्र रात्रेर्द्वितीय प्रहरे स्थातव्यम्। अहमागमिष्यामि। अधुना गच्छामि।

**देव०-** अस्तु तावत्।

***(सुशीला मन्दिरान्निष्क्रमणं नाटयति। पुनरपि सखीना मध्ये कथा श्रावयन्ती)***

सत्यमुक्तमासीत् तेन। नरो विरचयति सङ्कल्पम्, देवो विकारयति विकल्पैरिति। मया पुनरपि तस्य उपदेशो हृदि न धारित। यत्किमपि तदानी यावत् मम आसीत् तस्मादपि अह वञ्चिता। अथवा अवशिष्टमेव किमासीत् तदानी मम पार्श्वे यस्मात् वञ्चिता भवेयम्? सर्वस्व तु मया हारित पूर्वमेव। तस्य सर्वस्वस्य पुन प्राप्तिकामनया तथाऽह अन्धीभूता यथा यत् राज्ञ सबलसिहात् स्वपत्युश्च चिर वियुक्ता। उभयोर्जीवनलीलैव ममापचरितै समाप्ति गता। अह नृप हतवती। हत्वा

नृप च पति भुजङ्गदष्ट दृष्टवती।

सा रात्रिर्नून कालरात्रिरासीत्। यदि सबलसिहो मा न तदानी न्यवारयिष्यत्– तदा न सर्व तदभविष्यत्–

***(स्मृतिदृश्यम्। अन्धकार:। सुशीला कृष्णपटेन प्रावृता सावधानं राजप्रासादस्य कक्ष्या अतिक्रामति। सम्मुख प्रविशति सबलसिहः।)***

**सबल०-** क-- कस्तत्र वर्तते?

*सुशीला-* भवान्? भवान् इदानी यावन्नैव सुप्त?

**सबल०-** नैव सुप्तोऽहम्। त्वया कि विचारितम्– एव मदिरा पायितोऽह त्वया यत् सर्वथा मूर्च्छाधीन क्वचित् पतित स्याम्! त्व च त स्वभर्तार याया! नाह तव मायया वञ्चित स्याम्। तथापि प्रशसामि ते साहसम्। सर्वथा मुग्धोऽस्मि तवानेन आग्रहेण। स्त्रि, परावर्तस्व। पृष्ठ नय स्वकीय अग्रे गत चरणम्। नो चेत् त्वा द्विधा कर्तयामि। अधुना अस्मात् प्रसादात् पदात् पदमपि गन्तु न शक्नोषि।

**सुशीला-** प्रसीद मयि। गन्तु देहि मे। पतामि तव पादयो। अनुमन्यस्व मम परावर्तनम्।

**सबल०-** मम कुले कलङ्क दास्यसि? या कापि अस्मिन् प्रासादे सकृत् समागता, सा कदापि बहिर्न याता। दोषस्तु ममैव आसीत्। तव कार्तिकस्नानच्छल नाह ज्ञातवान्। अह किमजानाम् यत् कार्किकस्नानब्याजेन त्व कीदृशी कृषरा पचसि! गच्छ गच्छ, अन्त विश! स्त्रि! कथयामि त्वाम्, त्वामेव कथयामि! न शृणुषे? अधुनापि तथैव तिष्ठसि दण्डायमाना? चल, चल अन्तश्चल! ***(सबलात्कारं तां धर्षयन् अन्त: नेतु चेष्टते। सहसा तमवधूय सुशीला स्थिर स्थिता)।***

**सुशीला-** अह कथयामि, मा रुणद्धि मम पन्थानम्।

**सबल-** अयि पापिष्ठे, पतिते! वेश्ये, अन्तश्चल। अन्तस्त्वा द्रक्ष्यामि। सर्व ते साहस निस्सारयामि तव देहात्। स्थास्यति करालकारागारे। क कोऽत्र? गृह्यतामिय पिशाची। मामेव चक्षुषी दर्शयति। ***(सुशीला वस्त्रेषु गोपितां छुरिका निष्कास्य सबलसिहस्य वक्षसि प्रहरति। सबलसिश्चीत्करोति। सुशीला पलायते।)***

***( समूहगीतम्)***

*कालचक्रमिह परावर्तितम्*  
*सर्व विनाशितम्, सर्वमपहारितम्*  
*प्राणधन जीवने यदर्जितम्*  
*गत तदपि, नैव किमप्यवाप्तम्।।*  
*आस्कन्नाऽह निर्विण्णाऽहम्*

*इह तावत् सीदामि*
*गर्ते पतितोद्धर्तुम्*
*आत्मान न प्रभवामि*
*वृथा हिण्डित, वृथा नर्तितम्।*

**सुशीला (सखीसमूहे कथा श्रावयन्ती)-** सहसैव तत्सर्व घटितम्। मया आत्मरक्षार्थं छुरिका एका वस्त्रेषु गोपायिता आसीत्, न कमपि हन्तुम्। परन्तु वधो जातो मम हस्तात् तस्य सबलसिंहस्य। तदानीमहमुन्मत्ता आसम्। नात्मनि अपारयम्। निशीथवेला आसीत्। घनान्धकार सर्व प्रसृत। अह देवालय प्राप्ता। मम पतिस्तत्र आसीत्। स मया शपथ ग्राहित आसीत्, अर्धरात्रे तत्र अवश्य तेन भवितव्यमिति। शपथबद्ध स मम मा प्रतीक्षमाणस्तत्र तस्थौ। परन्तु कि जातम्। देवालय प्राप्याह तस्य चीत्कारमशृण्वम्।

***(स्मृतिदृश्यम्। सुशीला धावन्ती मन्दिरं प्राप्नोति। ततः प्रविशति विकलो देवशर्मा)***

**सुशीला-** कि सञ्जातम्? किमर्थं चीत्कृतवान् भवान्?

**देव०-** ***(स्खलदक्षरै)-*** सर्वम्— समाप्तम्—सुशीले— त्व — राजप्रासाद — परावर्तस्व——

**सुशीला-** मा तावत्। कथमेवविधोऽसि जात? अपि कुशल ते— — किमपि क्षत तु न जातम्?—

**देव०-** इदानीमपि समयो वर्तते। परावर्तस्व—

**सुशीला-** न न। अतीत खलु काल। परावर्तनस्य सर्वाणि द्वारामि पिधाय समागताऽहम्। उत्तिष्ठ तावत्। त्यक्ष्यावो मथुराम्। उत्तिष्ठ इदानीमेव। ***(उत्थापयितुं चेष्टते। तमवलोक्य सभयम्, साशङ्कम्)*** कथमेव भवसि—?

**देव०-** याहि त्वम्। गच्छाम्यह स्वपथेनैव।

**सुशीला-** न,न। सहैव गमिष्याव।

**देव०-** न शक्नोमि— - केनापि सर्पेण दष्टोस्मि। अन्धे तमसि द्रष्टु नापारयम् तम्। प्रसरति विषविकार। म्रियेऽहम्।

**सुशीला-** कुत्र दष्ट सर्पेण। अह विष चूषामि।

**देव०-** अलम् अकृतार्थारम्भेण। समागतो मे काल। जानामि स्माह पूर्वमेव- इदानी निर्वाति जीवनदीप इति। भगवता आकारितोऽहम्। गच्छाम्यहम्। मया बहूनि दु खानि दत्तानि ते सुशीले। इदानीम् सुखम्— आस्व। देहि मे मुक्तिम्- हे शिव शम्भो—

